॥ सद्दर्शनम् ॥

श्रीभगवद्रमणमहर्षि-विरचित-द्राविडग्रन्थस्य
संस्कृतानुवादात्मकम्

मङ्गलम्

सत्प्रत्ययाः किं नु विहाय सन्तं
हृद्येष चिन्तारहितो हृदाख्यः ।
कथं स्मरामस्तममेयमेकं
तस्य स्मृतिस्तत्र दृढैव निष्ठा ॥ १ ॥

मृत्युञ्जयं मृत्युभियाश्रिताना-
महंमतिर्मृत्युमुपैति पूर्वम् ।
अथ स्वभावादमृतेषु तेषु
कथं पुनर्मृत्युधियोऽवकाशः ॥ २ ॥

ग्रन्थारम्भः

सर्वैर्निदानं जगतोऽहमश्च
वाच्यः प्रभुः कश्चिदपारशक्तिः ।
चित्रेऽत्र लोक्यं च विलोकिता च
पटः प्रकाशोऽप्यभवत्स एकः ॥ ३॥

तत्त्वग्रन्थमाला

आरभ्यते जीवजगत्परात्म-
तत्त्वाभिधानेन मतं समस्तम् ।
इदं त्रयं यावदहंमति स्यात्
सर्वोत्तमाऽहंमतिशून्यनिष्ठा ॥ ४॥

सत्यं मृषा वा चिदिदं जडं वा
दुःखं सुखं वेति मुधा विवादः ।
अदृष्टलोका निरहंप्रतीति-
र्निष्ठाऽविकल्पा परमाऽखिलेष्टा ॥ ५॥

सरूपबुद्धिर्जगतीश्वरे च
सरूपधीरात्मनि यावदस्ति ।
अरूपकात्मा यदि कः प्रपश्येत्
सा दृष्टिरेकाऽनवधिर्हि पूर्णा ॥ ६॥

यत्पञ्चकोशात्मकमस्ति देहं

तदन्तरा किं भुवनं चकास्ति ।
देहं विना पञ्चविधं तदेतत्
पश्यन्ति के वा भुवनं भणन्तु ॥ ७॥

शब्दादिरूपं भुवनं समस्तं
शब्दादिसत्तेन्द्रियवृत्तिभास्या ।
सत्तेन्द्रियाणां मनसो वशे स्यात्
मनोमयं तद्भुवनं वदामः ॥ ८॥

धिया सहोदेति धियास्तमेति
लोकस्ततो धीप्रविभास्य एषः ।
धीलोकजन्मक्षयधाम पूर्णं
सद्वस्तु जन्मक्षयशून्यमेकम् ॥ ९॥

भवन्तु सद्दर्शनसाधनानि
परस्य नामाकृतिभिः सपर्या ।
सद्वस्तुनि प्राप्तदात्मभावा
निष्ठैव सद्दर्शनमित्यवेहि ॥ १०॥

द्वन्द्वानि सर्वाण्यखिलास्त्रिपुट्यः
किञ्चित्समाश्रित्य विभान्ति वस्तु ।
तन्मार्गणे स्याद्गलितं समस्तं
न पश्यतां सच्चलनं कदापि ॥ ११॥

विद्या कथं भाति न चेदविद्या
विद्यां विना किं प्रविभात्यविद्या ।
द्वयं च कस्येति विचार्य मूल-
स्वरूपनिष्ठा परमार्थविद्या ॥ १२॥

बोद्धारमात्मानमजानतो यो
बोधः स किं स्यात्परमार्थबोधः ।
बोधस्य बोध्यस्य च संश्रयं स्वं
विजानतस्तद्द्वितयं विनश्येत् ॥ १३॥

निद्रा न विद्या ग्रहणं न विद्या
गृह्णाति किञ्चिन्न यथार्थबोधे ।
निद्रापदार्थग्रहणेतरा स्यात्
चिदेव विद्या विलसन्त्यशून्या ॥ १४॥

सत्यश्चिदात्मा विविधाकृतिश्चित्
सिध्येत्पृथक्सत्यचितो न भिन्ना ।
भूषाविकाराः किमु सन्ति सत्यं
विना सुवर्णं पृथगत्र लोके ॥ १५॥

तद्युष्मदोरस्मदि सम्प्रतिष्ठा
तस्मिन् विनष्टेऽस्मदि मूलबोधात् ।
तद्युष्मदस्मन्मतिवर्जितैका
स्थितिर्ज्वलन्ती सहजात्मनः स्यात् ॥ १६॥

भूतं भविष्यच्च भवत्स्वकाले
तद्वर्तमानस्य विहाय तत्त्वम् ।
हास्या न किं स्याद्गतभाविचर्चा
विनैकसङ्ख्यां गणनेव लोके ॥ १७॥

क्व भाति दिक्कालकथा विनाऽस्मान्
दिक्काललीलेह वपुर्वयं चेत् ।
न क्वापि भामो न कदापि भामो
वयं तु सर्वत्र सदा च भामः ॥ १८॥

देहात्मभावे ज्ञजडौ समाना-
वेकस्य देहे हृदि दीप्त आत्मा ।
आक्रम्य देहं च जगच्च पूर्णः
परस्य मेयं तनुमात्रमात्मा ॥ १९॥

अज्ञस्य विज्ञस्य च विश्वमस्ति
पूर्वस्य दृश्यं जगदेव सत्यम् ।
परस्य दृश्याश्रयभूतमेकं
सत्यं प्रपूर्णं प्रविभात्यरूपम् ॥ २०॥

विधेः प्रयत्नस्य च कोऽपि वाद-
स्तयोर्द्वयोर्मूलमजानतां स्यात् ।
विधेः प्रयत्नस्य च मूलवस्तु
सञ्जानतां नैव विधिर्न यत्नः ॥ २१॥

यदीशितुर्वीक्षणमीक्षितार-
मवीक्ष्य तन्मानसिकेक्षणं स्यात् ।

न द्रष्टुरन्यः परमो हि तस्य
वीक्षा स्वमूले प्रविलीय निष्ठा ॥ २२॥

आत्मानमीक्षेत परं प्रपश्ये-
दित्यागमोक्तेः सुलभो न भावः ।
नात्मैव दृश्यो यदि का कथेशे
स्वयं तदन्नीभवनं तदीक्षा ॥ २३॥

धिये प्रकाशं परमो वितीर्य
स्वयं धियोऽन्तः प्रविभाति गुप्तः ।
धियं परावर्त्य धियोन्तरेऽत्र
संयोजनान्नेश्वरदृष्टिरन्या ॥ २४॥

न वक्ति देहोऽहमिति प्रसुप्तौ
न कोऽपि नाभूवमिति प्रवक्ति ।
यत्रोदिते सर्वमुदेति तस्य
धियाऽहमः शोधय जन्मदेशम् ॥ २५॥

देहो न जानाति सतो न जन्म
देहप्रमाणोऽन्य उदेति मध्ये ।
अहङ्कृतिग्रन्थिविबन्धसूक्ष्म-
शरीरचेतोभवजीवनामा ॥ २६॥

रूपोद्भवो रूपततिप्रतिष्ठो
रूपाशनो धूतगृहीतरूपः ।
स्वयं विरूपः स्वविचारकाले
धावत्यहङ्कारपिशाच एषः ॥ २७॥

भावेऽहमः सर्वमिदं विभाति
लयेऽहमो नैव विभाति किञ्चित्।
तस्मादहंरूपमिदं समस्तं
तन्मार्गणं सर्वजयाय मार्गः ॥ २८॥

सत्या स्थितिर्नाहमुदेति यत्र
तच्चोदयस्थानगवेषणेन ।
विना न नश्येद्यदि तन्न नश्येत्
स्वात्मैक्यरूपा कथमस्तु निष्ठा ॥ २९॥

कूपे यथा गाढजले तथान्त-
र्निमज्ज्य बुद्ध्या शितया नितान्तम् ।
प्राणं च वाचं च नियम्य चिन्वन्
विन्देन्निजाहङ्कृतिमूलरूपम् ॥ ३०॥

मौनेन मज्जन्मनसा स्वमूल-
चर्चैव सत्यात्मविचारणं स्यात् ।
एषोऽहमेतन्न मम स्वरूप-
मिति प्रमा सत्यविचारणाङ्गम् ॥ ३१॥

गवेषणात्प्राप्य हृदन्तरं तत्
पतेदहन्ता परिभुग्नशीर्षा ।
अथाहमन्यत्स्फुरति प्रकृष्टं
नाहङ्कृतिस्तत्परमेव पूर्णम् ॥ ३२॥

अहङ्कृतिं यो लसति ग्रसित्वा
किं तस्य कार्यं परिशिष्टमस्ति ।
किञ्चिद्विजानाति स नात्मनोऽन्यत्
तस्य स्थितिं भावयितुं क्षमः कः ॥ ३३॥

आह स्फुटं तत्त्वमसीति वेद-
स्तथाप्यसम्प्राप्य परात्मनिष्ठाम् ।
भूयो विचारो मतिदुर्बलत्वं
तत्सर्वदा स्वात्मतया हि भाति ॥ ३४॥

न वेद्म्यहं मामुत वेद्म्यहं मा-
मिति प्रवादो मनुजस्य हास्यः ।
दृग्दृश्यभेदात् किमयं द्विधात्मा
स्वात्मैकतायां हि धियां न भेदाः ॥ ३५॥

हृत्प्राप्य सद्धाम निजस्वरूपे
स्वभावसिद्धेऽनुपलभ्य निष्ठाम् ।
मायाविलासः सदसत्सरूप-
विरूपनानैकमुखप्रवादाः ॥ ३६॥

सिद्धस्य वित्तिः सत एव सिद्धिः
स्वप्नोपमानाः खलु सिद्धयोऽन्याः ।
स्वप्नः प्रबुद्धस्य कथं नु सत्यः

सति स्थितः किं पुनरेति मायाम् ॥ ३७॥

सोऽहंविचारो वपुरात्मभावे
साहाय्यकारी परमार्गणस्य ।
स्वात्मैक्यसिद्धौ स पुनर्निरर्थो
यथा नरत्वप्रमितिर्नरस्य ॥ ३८॥

द्वैतं विचारे परमार्थबोधे
त्वद्वैतमित्येष न साधुवादः ।
गवेषणात्प्राग्दशमे विनष्टे
पश्चाच्च लब्धे दशमत्वमेकम् ॥ ३९॥

करोमि कर्मेति नरो विजानन्
बाध्यो भवेत्कर्मफलं च भोक्तुम् ।
विचारधूता हृदि कर्तृता चेत्
कर्मत्रयं नश्यति सैव मुक्तिः ॥ ४०॥

बद्धत्वभावे सति मोक्षचिन्ता
बन्धस्तु कस्येति विचारणेन ।
सिद्धे स्वयं स्वात्मनि नित्यमुक्ते
क्व बन्धचिन्ता क्व च मोक्षचिन्ता ॥ ४१॥

रूपिण्यरूपिण्युभयात्मिका च
मुक्तिस्त्रिरूपेति विदो वदन्ति ।
इदं त्रयं या विविनक्त्यहन्धी-
स्तस्याः प्रणाशः परमार्थमुक्तिः ॥ ४२ ॥

सद्दर्शनं द्राविडवाङ्निबद्धं
महर्षिणा श्रीरमणेन शुद्धम् ।
प्रबन्धमुत्कृष्टममर्त्यवाण्या-
मनूद्य वासिष्ठमुनिर्व्यतानीत् ॥ ४३ ॥

सत्तत्त्वसारं सरलं दधाना
मुमुक्षुलोकाय मुदं ददाना ।
अमानुषश्रीरमणीयवाणी-
मयूखभितिर्मुनिवाग् विभाति ॥ ४४॥

॥ सद्दर्शनं समाप्तम्॥